अव्यक्तेनच धर्मस्य ! तथा मुक्तिमिखेन च ।
स्नात्वाचम्य पयः स्पृश्य गृह्णीत प्रयतः शुचिः ॥
द्रव्यस्य नाम गृह्णीयाद्दाता तथा निवेदयेत् ।
तोयं दत्त्वा तथा दाता दाने विधिरयं स्मृतः ॥
प्रतिगृहीता सावित्रं सर्वमत्र तुदीरयेत् ।
साधद्रव्येण तत् सर्वं तद्रूपस्य रुदंवतम् ॥
समाप्य तत: पश्चात्कामं स्नात्वा प्रतिग्रहम् ॥
प्रतिग्रही पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्दं पठेत राजान्यादुपांशु च तथाविशः ॥
मनसा च तथा शूद्रात् कर्त्तव्यं स्वस्तिवाचनम् ।
सोङ्कारं ब्राह्मणो ब्रूयात् निरोङ्कारं महीपतिः ॥
उपांशु च तथा वैश्ये स्वस्ति शूद्रे तथैव च ।
न दानं यशसे दद्यात् नभयान्नोपकारिणे ॥
न नृत्यगीतशीलेभ्यो हासिकेभ्यश्च धार्मिकः ।
पात्रभूतोहि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ॥
असत्सु विनियुञ्जीत तस्मै देयं न तद्भवेत् ।
सञ्चयं कुरुते यस्तु समादाय इतस्ततः ॥
धर्मार्थं नोपयुञ्जीत न तं तस्कर मर्चयेत् ।
यस्मै दद्याद्द्विजा ! दस्य नत्वा तमुररी नरः ॥
दानञ्च हृदि संचिन्त्य जलमध्ये जल क्षिपेत् ।
वदन्ति मुनयो गाथां परोक्षे दानसत्फलम् ॥
परोक्षे चैव यद्दानं प्रत्यक्षात्कोटिशो भवेत् ।
पात्रं मनसि सञ्चिन्त्य गुणवन्त मभीप्सितम् ॥
अप्सु ब्राह्मणहस्ते वा भूमावपि जलं क्षिपेत् ।

दानकाले तु संप्राप्ते पात्रे चासन्निधौ जलम् ॥
अन्यविप्रकरे दद्याद्दानं पात्राय दीयते ।
विष्णुस्ते तारणायास्तु गृह्णन्ति हि करोदकम् ॥
तद्दानं ब्रह्म संप्राप्त मक्षय्य मिति विष्णुगाः ।
लक्ष्मीदृष्टा च यद्दत्तं दरिद्रायार्थिने द्विज ! ॥
तदक्षय्यं समुद्दिष्ट मिति पराशरोऽब्रवीत् ।
राज्यभ्रष्टञ्च राजानं यस्तं राज्ये निवेशयेत् ।
विष्णुलोकसमं भुज्य भवेत्पतिर्दिवौकसाम् ॥
प्रतिगृह्य द्विजार्थं यो न यच्छति च तं पुनः ।
न च स्मारयते विप्र स्तुल्यन्तदुपपातकम् ॥
प्रतिश्रुत्य तु यत्किञ्चिद्द्विजेभ्यो न ददाति यः ।
स वै द्वादश जन्मानि शृगालीं योनिमाप्नुयात् ॥
धेन्वादीनि प्रवक्ष्यामि यथा लक्षणशीलितान् ।
मानभूमिन्तिलादीनां यथावत्तां निबोधत ॥
अजातदन्ता या तु स्याद्गर्भदन्तसमन्विता ।
वर्षादर्वाक् चतुर्याचे यावदेतत् प्रकीर्तिता ।
सुशीला च सुवर्णा च अरोगा च यशस्विनी ॥
सुवत्सा प्रथमं सूता धेनुर्गौरभिधीयते ।
अरोगा या परिक्लिष्टा प्रसवत्यप्रसूतिका ॥
सूता सातिपयोयुक्ता सा गोमामान्यतः स्मृता ।
पूर्वोक्तगुणसंयुक्ता प्रत्यङ्गे प्रसवा तथा ॥
साथ गौर्धेनुरित्युक्ता वाशिष्ठस्यवचो यथा ॥
पञ्चगुञ्जो भवेन्माषः कर्षः षोडशभिश्च तैः ।
तैश्चतुर्भिः पलं प्रोक्तं दाने मानं च पुण्यदम् ॥
भद्रनारैकहस्ताभिः प्रसृतीभिश्च तालभिः ।

माषास्तैश्चतुर्भिश्च वेतिकेति प्रकीर्तिता:॥
ताभिश्चतसृभिः प्रस्थश्चतुर्भिराढकैश्च तैः।
द्रोणश्चतुर्भिस्तै स्तस्मो धान्यमानं प्रकीर्तितम्॥
तैलप्रसृतिभिर्भाण्डं चतसृभिर्यत्प्रपूर्यते।
तैश्चतुर्भिश्च कूर्चश्च तैश्चतुर्भिश्चैफलम्॥
पातैश्चतुर्भिः स्यात्कुम्भी पाटी तच्च चतुष्टयम्।
करकं चतसृभि स्ताभिश्चतुर्भिस्तैर्घटः स्मृतः॥
इत्येतैः कविभिः प्रोक्तं छतगोतिलगोसमाः।
किञ्चिच्च यदुनोक्तेन दानस्य तु पुनः पुनः॥
दीयते यद्दरिद्राय कुटुम्बिने तदक्षयम्।
सकृद्दधाय विप्राय भक्त्या परमया वसु॥
दीयन्ते वेदविदुषे तदुपतिष्ठन्ति यौवने।
अथान्यत्सम्प्रवक्ष्यामि दानानि निष्फलानि तु॥
तथा निष्फलजन्मानि तथा तव निबोधत।
वृथा जन्मानि चत्वारि वृथा दानानि षोडश॥
तानि पृथक् प्रवक्ष्यामि निबोध त्वं द्विजोत्तम॥
अपुत्रस्य वृथा जन्म ये च धर्मबहिष्कृताः॥
दरिद्रस्य वृथा जन्म व्याधितस्य तथैव च।
अपुण्यस्थाने यद्दत्तं वृथादानं प्रकीर्तितम्॥
आरूढपतिते दानं अन्यायोपार्जितञ्च यत्।
व्यर्थं मब्राह्मणे दानं पतिते तस्करेऽपि च॥
गुरोरप्रीतिजनके कृतघ्ने ग्रामयाचके।
ब्रह्मबन्धौ च यद्दानं यद्दत्तं वृषलीपतौ॥
विक्रयिणे चैव यस्य चोपपतिश्चहे।

स्त्रीजिते चैव यद्दत्तं व्याजग्राहे तथैव च ॥
परिचारके तु यद्दत्तं वृथा दानानि षोडश।
तमोवृत्तश्च यो दद्याद्भयात् क्रोधात्तथैव च ॥
विद्वद्वृत्तं हि तत्सर्वं भुङ्क्ते गर्भस्थ एव हि।
ईर्ष्यया मन्युना दानं यद्दान मर्थकारणात् ॥
यो ददाति द्विजातिभ्यो बालाभावे तदश्नुते।
स्वयं नीत्वा च यद्दानं भक्त्या पात्रे प्रदीयते ॥
अप्रमेयगुणं तद्धि उपतिष्ठति यौवने।
यत्तद्विप्राय वृद्धाय भक्त्या परमया वतु ॥
दीयते वेदविदुषे तदुपतिष्ठति वार्द्धके।
तस्मात्सर्वास्ववस्थासु सर्वदानानि सत्तम! ॥
दातव्यानि द्विजातिभ्यः स्वर्गमार्ग मभीप्सता।
भूमेः प्रतिग्रहं कुर्याद्भूमिं कृत्वा प्रदक्षिणम् ॥
करे स्पृष्ट्वा तथा कन्यां दासदासौ तथा द्विजः।
करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहः।
आरुह्य च गजस्योक्तकर्णस्त्वाश्वः प्रकीर्त्तितः ॥
तथा चैकशफानाञ्च सर्वेषा मविशेषतः।
प्रतिगृह्णीत गां शृङ्गे पृष्ठस्थाजिनं तथा ॥
कर्णजाः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः।
प्रतिग्रहं तयोर्दृष्ट्वा आरुह्यैव तु पादुके ॥
ईशायान्तु रथो ग्राह्यः छत्रं दण्डे तु धारयेत्।
द्रुमाणा मथ सर्वेषां मूले न्यस्तकरो भवेत्।
आयुधानि समादाय तथासुष्य विभूषणम्।
धर्मध्वज तथा स्पृष्ट्वा प्रविश्य च तथाम्बरम् ॥

अवतीर्य तु सर्वाणि जलस्थानानि यानि तु।
उपविश्य च शय्यायां स्पर्शयित्वा करेण वा॥
द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा वा ब्राह्मणः पठेत्।
कन्यादाने तु यं पठेद् द्रव्याणि तु पृथक् पृथक्॥
प्रतिग्रहं द्विजश्रेष्ठ! तथैवान्ते भवन्ति ते।
द्रव्याणामथ सर्वेषां द्रव्यसंश्रयणाक्षरः॥
वाचयेज्जलमादाय स्वकारेण प्रतिग्रहम्।
प्रतिग्रहस्य यो धर्मं यो जानाति द्विजो विधिम्॥
सद्रव्यसोऽन्यसंयुक्तो नरकं प्रतिपद्यते।
अथापि वक्ष्यामि विधिं विशेषं वाजिदानतः॥
...त्यशीतोरपि येन पुण्यं स्वर्गाय जायेत स्पृणुध्वमेतत्।
...ह्णीत योऽश्वं विधिवद्विजेन्द्रः कुर्य्यादसौ पञ्चदिनानि पूर्वम्॥
...ष्टोपचारैर्युतविष्णुपूजां कृष्णाष्टमन्त्रैर्घृतदुग्धहोम।
...द्राम इत्यादि नवत्वतीयं सोङ्कारभूरादिभिरन्वितं च॥
...त्येकमष्टौ जुहुयाद्विजाग्र्याः! तदा तथामानसयेद्विजेन्द्राः!।
...र्येण मन्त्रेण च तद्दष्टौ पश्चात् प्रयुक्तं नियतं जुहोति॥
...र्यात्र गायत्र्यजपं सहस्रं पश्चात्प्रगृह्य सुरगं द्विजेन्द्रः।
...तापि चैतद्व्रतमाविदध्याद्विजाग्र्यवत्स्मात्तनयोर्विशुद्धे।
...वप्यमू सूर्य्य जवं लभेते यत्रापि पूज्यौ द्विजवृन्दमध्ये॥

अश्वप्रतिग्रहविधिः।

पुराणगीता तु भवन्ति गाथा विशिष्टपुण्यप्रतिपादनाय।
तियो प्रदत्तं द्विज! यत्र पूर्वं क्रमेण चैतं पुनरच्यतां तु॥
श्रावणे शुक्लपक्षे तु द्वादश्यां दीयते द्विज!।
गोप्रदानेन गोविन्दो वन्दत्येतन्मनीषिणः॥

पक्षे शुक्ले तथा वत्स ! द्वादश्यां घृतधेनुकाम्।
घृतार्चिः प्रयतात्मानं प्रदद्यात् फलदायिनीम्॥
तथैव माघद्वादश्यां प्रदत्ता तिलगौर्द्विज !।
केशवं प्रीणयत्याशु सर्वान् कामान् प्रयच्छति।
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां जलधेनुकाम्।
दत्त्वा विप्राय विधिना प्रीणयत्यम्बुशायिनम्॥
यत्र वा तत्र वा काले यदा तदा प्रदीयते।
विशेषार्थमिदं प्रोक्तं नान्यत्काले निषेधनम्॥
विष्णुमुद्दिश्य विप्रेभ्यो निःस्वेभ्यो यत् प्रदीयते।
भवेत्तदक्षयं दानं उक्तमत्पाशरैरिदम्॥
काले पात्रे तथा देशधनं न्यायार्जितं तथा।
यद्दत्तं ब्राह्मणश्रेष्ठे तदनन्तं प्रकीर्तितम्॥
चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे।
यच्चान्यं कथितं सर्वं तदप्यर्के विशिष्यते।
द्वादशी पुण्यशुक्लासु विशेषाच्छ्रावणेन तु॥
यत्र प्रदीयते किञ्चित्तदनन्तं द्विजोत्तम !।
वैशाखे शुक्लपक्षे तु विशेषादपि मानवः॥
आषाढी कार्त्तिकी चैव फाल्गुणी तु विशेषतः।
तिस्रश्चैताः पौर्णमास्यो दाने विप्र ! महाफलाः॥
व्यतीपातेषु सर्वेषु समर्थेषु द्विजोत्तम !।
ग्रहसंक्रमकाले तु तीव्ररश्मे विशेषतः॥
तुला मेषप्रयाणेषु योगेषु मिथुनस्य च।
देवैर्महाफलं दानमन्येभ्योऽपि स्यान्महाफलम्॥
यदा प्रविशति भानु र्मकरं द्विजसत्तम !।

आषाढेऽश्वयुजे पौषे चैत्रे शुक्ले तथैव च ॥
द्वादशीसहितं प्रोक्तं पुण्यं दिनचतुष्टयम्।
मिथुनञ्च तथा कन्यां धन्विनां मीनमेव च॥
प्रविष्टे भास्करे पुण्यं कथितं द्विजसत्तम !।
षडशीतिमुखं नाम दाने दिनचतुष्टयम् ॥
अच्छिन्ननाड्यां यद्दत्तं पुत्रे जाते द्विजोत्तम !।
संस्कारे चैव पुत्रस्य तदक्षय्यं प्रकीर्त्तितम् ॥
एताश्च विविधाः प्रोक्ताः स्वाश्च कार्य्या यथोदितम्।
सर्वास्वपि हि सद्भिर्भैरिव्यं धर्मं मभीप्सुभिः॥
सत्यञ्च धिद्विज नालकश्चि मिद्यर्थमुक्तानि क्रियन्ति विप्राः !।
दानानि व ाश्यथ पूर्त्तधर्मं माघेन पुंसोऽर्विहितेन धर्मः।
ब्रह्मेशहरिसूर्य्याणां स्कन्धे भास्वाम्बिके तथा।
ईशदुर्गाग्रकाणाञ्च गृहाणि कारयेन्नरः॥
इष्टकामयतं वापि यश्चार्पयति विष्णवे।
अनेन विधिना कुर्यात् विष्णुलोक मवाप्नुयात् ॥
एवं यः सर्वदेवानां मन्दिरं कारयेन्नरः।
स याति वैष्णवं लोकं परितुष्टो हरिर्नरः॥
समाचरति यो भग्नं सुधया लेपयेद्यथा।
शुभ्रं पतिश्च यस्तत्तु विशिष्टै र्देवलेपनैः॥
सम्मार्जयति यस्तत्तु यथाचैवानुलेपयेत्।
प्रदीपन्तत्र योदद्यात् स याति विष्णुलोकताम् ॥
पूजयेद्यस्तु विधिना पञ्चोपचारसंयुतः।
स विष्णुलोकमभ्येति क्रीड़ते च चतुर्भुजे ॥
यावन्तत् श्रेष्ठिकास्तत्र विन्तदै स्य सद्मनि।

तान्यब्दसहस्राणि विष्णुलोकं समाविशेत् ॥
स नित्यस्तत्तडाकानि पुष्करिण्यश्च दीर्घिकाः ।
तथा कूपाश्च कर्त्तव्या वाप्यश्च गृहमेधिभिः ॥
खातमात्रश्च कर्त्तव्यं एकाहिकजलं नरैः ।
यावत्पीत्वा जलं गौस्तु तृषार्त्तापि तृप्ती भवेत् ॥
पिबन्ति सर्वसत्वानि तृषार्त्ता अम्भसामिव ।
गण्डूषाणि तु तावन्ति तत्कर्त्ता तत्समन्दिवि ॥
यावन्ति ह्युपकुर्वन्ति गण्डूषाणि क्षितौ तु च ।
कुर्वतां स्नानशौचादि यावदाचमनं तथा ॥
तावत्संख्यानि वर्षाणि लक्षाणि दिवि मोदते ।
अथ स च विशेत् स्वर्गं सेव्यमानोऽप्सरोगणैः ॥
आरामाश्चापि कर्त्तव्याः शुभवृक्षैः सुशोभितैः ।
अश्वत्थोदुम्बरप्लक्षचूतना[illegible]दनीवरैः ॥
जम्बूनिम्बकदम्बैश्च खर्ज्जूरैर्नारिकेलकैः ।
वकुलैश्चम्पकैर्वृक्षैः पाटलाशोककिंशुकैः ।
द्रुमैर्नानाविधैरन्यैः फलपुष्पोपयोगिभिः ॥
जातीरूपादिपुष्पैस्तु शोभिताश्च समन्ततः ।
फलोपयोगिनः सर्वे तथा पुष्पोपयोगिनः ॥
आरामेषु च कर्त्तव्याः पितृदेवोपयोगदाः ।
गाथामुदाहरन्त्यत्र तद्विदः कवयोऽपरे ॥
वृक्षारोपणकं पुंसा सुक्ता याः पुण्यवाचकाः ।
अश्वत्थमेकं पिचुमर्दमेकं न्यग्रोधमेकं दशचिञ्चिणीश्च
षट्चम्पकं तालशतत्रयं च पञ्चाम्रवृक्षैर्नरकं न पश्

यावन्ति खादन्ति फलानि वृक्षाः सुदक्षिदग्धस्य तु कल्पणीयाम् ।
वर्षाणि तावन्ति वसन्ति नाके द्रुमोपकर्तृपुरुषाः समरौघसेव्याः ॥
पुष्पाणि यावन्ति च पुष्पितानु दिवौकसां मूर्ध्नि धरातले वा ।
पतन्ति तावन्ति च वत्सराणां कल्पाणि वृक्षैर्दिवमारुहन्ति ॥
सत्कालपक्वैर्मधुरैरदश्च शाखाच्युतैः स्वादुफलैर्नगाद्याः ।
वर्षाणि रत्नानि समर्पयस्व तत्स्याद्वरानेन च वृजनायान् ॥
उद्दिश्य विष्णुं जगतामधीशं नारायणं यत्पुरुषः करोति ।
आनन्त्यमाप्नोति कृतं तु तस्मादनन्ततोयं भगवान् पुराणः ॥
दानानि सर्वाण्यभिधाय विद्वन् ! नष्टस्य पूर्तं स्वहमेधिकर्म ।
सर्वन्ति शान्तिं मनुजाः शुभाय वक्ष्यामि तत्स्यादयमर्वशान्त्यै ॥
उक्तानि सर्वदानानि इष्टापूर्तञ्च सत्तमाः ! ।
अतःपरं प्रवक्ष्यामि गणेशादिकशान्तयः ॥

इति श्रीवृद्धहारीतीये धर्मशास्त्रे सुव्रतप्रणीतायां
धर्मसंहितायां दानधर्मेषु पूर्तविनिर्णयो
नामाष्टमोऽध्यायः ॥

---

## नवमोऽध्यायः ।

शान्तीनामथ सर्वासां ग्रहशान्तिः परा स्मृता ।
ग्रहेभ्योऽपि गणेशस्तु तस्य शान्तिरथोच्यते ॥
यदि पुंभिः कृतकर्माणि भवन्ति फलदानि हि ।
तदा धर्मार्थकामाप्तु संसिध्येरन् सदा नृणाम् ॥
तन्नृभिः क्रियमाणानां सर्वेषां कर्मणामयम् ।
विघ्नार्थमसृजद्ब्रह्मा शङ्करश्च विनायकम् ॥

तेनोपहतपुंसान्तु कर्म स्यान्निष्फलं क्रतम्।
स्त्रीणामपि तथा सर्वं क्रियमाणन्तु निष्फलम्॥
जलावगाहनं स्वेन क्रव्यादारोहणं तथा।
खरोष्ट्रम्लेच्छसंसर्गं गुडकाषायवाससम्॥
पश्यत्यात्मानमेवेह सीदन्तं प्रतिवासरम्।
यानि कर्माणि कुर्वीत तानि स्युः क्लेशदानि हि।
राजपुत्रो न राज्याप्ता यद्याप्ता न तु कन्यका।
यत्नवर्त्तिन्यपत्याप्ता आचार्ये तु न सा द्विज!॥
अधीयानास्तु विद्याप्ता कृषिक्रत्सस्यसम्पदा।
वणिग्व्यर्त्तन लाभेन युज्यन्ते तद्वतस्य सन्॥
तस्मात्तदुपशान्त्यर्थं समभ्यर्च्य गणेश्वरम्।
स्नपनङ्कारयेत्तस्य विधिवत्पुण्यवासरे॥
स्वासनासीन संस्नाप्य आरक्तार्षभचर्मणि।
सितसर्षपकल्केन साज्येनाच्छादितस्य च॥
विलिप्त शिरसस्तस्य गन्धैः सर्वैस्तथौषधैः।
अष्टौ वा चतुरो वापि स्वस्ति वाच्यं द्विजान् शुभान्॥
एकवर्णैश्चतुर्भिश्च पुम्भिः कुम्भैश्च यज्जलम्।
समानीतं क्षिपेत्तत्र वक्ष्यमाणन्तदस्त्विमाः॥
अश्वेभस्थानवल्मीके ह्रदसङ्गमवर्त्तिका।
रोचनां गुग्गुलं गन्धान् तस्मिन्नम्भसि तान् क्षिपेत्॥
यत्ते द्वैपायनं स्नानं सहस्राच्च मृषिस्मृतम्।
तेन त्वा शतधारेण पावमान्यः पुनन्त्विमाः॥
नचाभिः पावमानीभिः कुम्भन्तमभिमन्त्रयेत्।
शक्रादिदश दिक्पाला ब्रह्मेशकेशवादयः॥

आपस्ते घ्नन्तु दौर्भाग्यं शान्तिं ददतु सर्वदा।
सुचिमियान इत्यादौ मन्त्रैर्नैकाभिषेचनम्॥
वदन्ति वदतां श्रेष्ठाः दौर्भाग्यस्योपशान्तये।
समुद्रा गिरयो नद्यो मुनयश्च पवित्रता॥
दौर्भाग्यं घ्नन्तु मे सर्वे शान्तिं यच्छन्तु सर्वदा।
पादजङ्घोरुजङ्घाश्च स्तितम्बोदरनाभिषु॥
स्तनांशे बाहुहस्ताग्रग्रीवा अंसाङ्गसन्धिषु।
नासा ललाटे कर्णाभ्रू केशान्तेषु च यत्स्थितम्॥
तदपो घ्नन्तु दौर्भाग्यं शान्तिं यच्छन्तु सर्वदा।
स्नातस्य मस्तके दर्भान् सव्येन परिरक्षिते॥
जुहुयात्सर्षपस्तैलमौदुम्बरस्रुवेण तत्।
मितश्च संमितश्चैव तथा सालकटङ्कटौ॥
कूष्माण्डो राजपुत्रश्चेत्यन्तस्वाहा समन्वितैः।
नामभिश्च बलिं दद्यान्मन्त्रैर्नाम स्वधान्वितैः॥
चतुष्पथं समाश्रित्य सूर्य्ये कृत्वा कुशांस्ततः।
निधाय तेषु दर्भेषु शुक्लाशुक्लांश्च तण्डुलान्॥
ओदनं पललोपेतं मत्स्यामान् मत्स्यकानपि।
तथा मांसञ्च कुल्माषान् तत्रैव त्रिविधां सुराम्।
पूरिकोण्डेरिकान् पूपान् फलानि मूलसंभ्रजः॥
गच्छेत् स मातुः पार्वत्याः कुर्य्यादुपस्थितं पुनः।
दूर्वासर्षपपुष्पैश्च पूर्णमार्घाञ्जलिं क्षिपेत्॥
सौभाग्य मम्बिके! देहि भगरूपं यशोऽपि च।
श्रियो पुत्रांश्च कामांश्च तथा शौर्यञ्च देहि मे॥
गणेशमात! रुद्राणे! यत्किञ्चिन्मदभीप्सितम्।

एतच्छ्रत्वे ! च तद्देहि देहि गौरि ! वरान् वरान् ॥
धनन्तु वाससी शुक्ले परिधायाऽह ते शुभे ।
सितचन्दनलिप्ताङ्गः सितस्रग्भूषणान्वितः ॥
तान् नत्वाऽथ द्विजान् सर्वान् भोजयेद्विविधाशनैः ।
वस्त्रयुग्मं गुरोर्दद्यात्तेन तस्य वराशिषः ॥
एतानि सम्पूज्य गणाधिदेवं विघ्नोपशान्त्यै जननी तथास्य ।
शान्तीकसम्यग्विधिना समासात्प्राप्नोति वाञ्छां मनसा यमिच्छेत्
स्नात्वा विधायाऽर्चन मम्बिकायाः सम्पूज्य लोकान् सखिबन्धुलोकान्
आचार्यहस्ताम्बनिताकुमारी प्रध्वस्तविघ्नः श्रियमेति गुर्वीम् ॥
शान्त्युक्तमन्त्रैर्विधिवत्प्रयुक्तैर्नित्यं द्विजानन्दनपूजनं च ।
स्तान्तरायान्विनिहत्य सर्वान् कुर्याद्दयातो ग्रहयागमेनम् ॥
इति श्रीवृहत्पाराशरीये धर्मशास्त्रे शान्त्यध्याये विनायकशान्तिः सम्पूर्णा ॥

---

मुनीनां व्यासमुख्यानां शुश्रूषाणुपुरोऽब्रवीत् ।
शुभाय ग्रहपूजायां वदतस्तानि बोधत ॥
यद्वर्णा यत्सुतास्विद्वान् जाता देशेषु येषु च ।
तेषां तदधिदैवत्यं सन्निधौ दक्षिणाय च ॥
यस्य यस्य च दिग्भागे मण्डलं स्याद्विवस्वतः ।
होमकर्मणि यो विप्रो या सङ्ख्या समिधावपि ।
अग्निकुण्डप्रमाणन्तु प्रमाणं समिधामपि ॥
सर्वमेव यथोद्देशं वक्ष्यामि द्विजसत्तम ! ।
रक्तः काश्यपजो भानुः शुक्लो मनुसुतः शशी ॥
रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः ।

पीतो ब्रह्मा सुराचार्य्यः शुक्लः शुक्रो भृगूद्भवः ॥
कृष्णः शनीरवेः पुत्रः कृष्णो राहुः प्रजापतिः।
कृष्णः केतुः श्मशानश्च कृष्णपापाश्रयोऽष्टमी ॥
कालगोऽयं पुनः सोम आवन्त्यः सोम उच्यते।
मागधो बुधइत्युक्तो गौतमस्तु बृहस्पतिः ॥
सैन्धवोदानवाचार्य्यसौरिसौराष्ट्रदेशजः।
राहुशक्लवदेशीत्थो मध्यदेशभवोऽग्निभूः ॥
जन्मदेश इमे प्रोक्ताः ग्रहजातक वेत्तृभिः।
शम्भुं रविं उमां चन्द्रं स्कन्दभौमं हरिं बुधम् ॥
ब्राह्मणञ्च गुरुं विद्याच्छुक्रं शुक्रं यमं शनिम्।
कालं राहुं चित्रगुप्तं केतु मित्यधिदैवतम् ॥
एतद्विज्ञाय यत्कुर्य्यात्तत्सर्वं सफलं भवेत्।
अर्कस्त्वर्काय होतव्यः सर्वव्याधिप्रणाशनः ॥
सुधामुखे च सोमाय पालाशः सर्वकामिकः।
खदिरश्चार्थलाभाय मङ्गलाय विवेकिभिः ॥
स्वरूपक्तदपामार्गो होतव्यश्च बुधाय च।
प्रभाप्रदस्तथाश्वत्थो होतव्योऽमरमन्त्रिणे ॥
अजी सौभाग्यजड़ेया दैत्यामात्याय सद्द्विज!।
धर्मविद्यार्थलाभौ स द्विजे र्वह्निसूनवे ॥
दधिक्षीराज्यसंमिश्राः समिधः शुभदक्षये।
शमी पापोपशान्त्यर्थं होतव्या मन्दगामिने ॥
दीर्घायुर्धर्मकृद्दूर्वा होतव्या राहवे द्विज!।
प्रादेशमात्रका सर्वा यष्टा वष्टोत्तरं शतम् ॥
अष्टाविंशतिरेकैकं सङ्ख्यैषा प्रतिदैवतम्।

इत्यातु कलभूयश्च सुत्राद्स्यत राक्षसम् ॥
नव भुवनकं लेख्यं चतस्रं मण्डलं द्विज ! ।
ग्रहांस्तत्र प्रतिष्ठाप्य वक्ष्यमाणक्रमेण तु ।
मध्ये तु भास्करः स्थाप्य पूर्वदक्षिणतः शशी ।
दक्षिणेन धरासूनु बुधः पूर्वोत्तरेण तु ॥
उत्तरस्यां सुराचार्यः पूर्वस्यां भृगुनन्दनः ।
पश्चिमायां शनिः कुर्यात् राहुर्दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुरिति स्थाप्याः ग्रहाः क्रमात् ।
पटे वा मण्डले लेख्या ईशान्यां दिशि पावकान् ॥
भास्करः स्फाटिकश्चन्द्रो रक्तचन्दनकोऽपरः ।
सोमसूनु सुराचार्यौ स्वर्णशोभौ प्रकीर्तितौ ॥
रजतो भृगुपुत्रस्य कार्यश्च स शनैश्चरः ।
राहुश्च सैसकः कार्यः कार्यः केतुश्च कांस्यकः ॥
सर्वानेतन्मया कृत्वा समभ्यर्च्य सदा ग्रही ।
लेखयेद्वर्णकैः स्वैः स्वैर्विधिवत्पीठकेन वा ॥
ग्रहाणां साधिदेवानां प्रतिष्ठापन मन्त्रकान् ।
वदन्ति मन्त्रतत्त्वार्थवेदिनो द्विजसत्तम ! ॥
आदित्यं गर्भमित्युक्त मग्निं दूतमनेन वा ।
एताभ्यां स्थापयेदर्कं त्र्यम्बकम् इति शङ्करम् ॥
अप्स्वन्तरीति शीतांशुः श्रीश्च त इति पार्वती ।
स्योना पृथ्वीति भौमश्च य इन्द्रं देति वा गुहम् ॥
इन्द्रं विष्णु बुधः स्थाप्य तद्विष्णोरिति वै हरिम् ।
इन्द्र आमां सुराचार्य्य आब्रह्माणं निबोधकम् ॥
इन्द्र देवी भगोः सूनु सर्वांचेत्यमराधिपम् ।

शन्नो देवी रवेः सूनुं यमाय त्वा तथा यमम् ॥
अयं गौरिति राहोश्च कालं कार्षीरमीति च ।
ब्रह्मजज्ञेति केतुश्च चित्रं चित्रावसोरिति ॥
ब्रूयुरेतानि मन्त्राणि मूलमन्त्राणि चापरे ।
आकृष्टेन च तीव्रांशोरिमन्देवा निशाकरम् ॥
अग्निमूर्धेति भूसूनोरुद्बुध्यस्व बुधस्य च ।
बृहस्पतिरिति गुरो रन्नात्परिस्रुतो भृगोः ॥
शन्नो देवी शनैर्मन्तुः काण्डात् काण्डात्परस्य च ।
केतुं कृण्वनग्निसूनुरयमंशः प्रकीर्तितः ॥
वेदमन्त्रैः सदा पूज्या विधिना ते द्विजन्मना ।
कर्त्तव्याश्चरवो मन्त्रैः स्वैः स्वैश्च प्रतिदैवतम् ॥
सघृता सयवाश्चापि होतव्याश्च द्विजैस्तिलाः ।
मध्यमानामिकामूललग्नाङ्गुष्ठं चतस्रभिः ॥
यावन्तोऽङ्गुलिभिर्ग्रासा स्तिला स्तावत्तवाहुतिम् ।
हस्तमात्रं पृथिव्यां न वेधोऽपि तावतैव तु ॥
बाहुमात्रं वदन्त्येके एके चारत्निमात्रकम् ।
चतुरस्रं खनेत्कुण्डमेकयोनिसमन्वितम् ॥
शुभमेखलया युक्तं सुशान्तिकरमुत्तमम् ।
होमार्थं मण्डलं कुर्य्याच्चतुर्द्वारसमन्वितम् ॥
चतुर्दिक्षु ध्वजाः कार्या नानावर्णाः शुभावहाः ।
तथा तत्रोदकुम्भाश्च दूर्वापल्लवसंयुताः ॥
पुनर्नवीकृतं पद्मं मण्डपाभावमाश्रयेत् ।
षट्कर्मनिरताः शान्ता ये न दग्धाः प्रतिग्रहे ॥

नियोज्यास्तेऽग्निकार्यादौ स्फुरन्मन्त्रा द्विजोत्तमाः
प्रतिग्रहा निदग्धस्य जपहोमादि कुर्वतः ॥
यस्य मन्त्राश्च वीर्याणि तत्कृतं कर्म निष्फलम् ।
ओदनं सगुडं भानोः पायसं शशिन स्तथा ॥
हविष्यं भूमिपुत्रस्य क्षीरान्नञ्च बुधस्य च ।
पूर्णं हविः शनैः केतो र्माषं राहोः हुताहुतम् ॥
चित्रान्नमग्निसूनोश्च भाज्यानामपि यस्य याः ।
होमं कृतस्तथान्येऽपि सदूहन्ताय द्विजाग्रजाः ॥
यथावर्णानि वासांसि देयानि कुसुमानि च ।
देया गन्धाश्च सर्वेषां देयो धूपश्च गुग्गुलः ॥
धेनुः शङ्खो वृषः स्वर्णं वासोऽश्वश्चासिता च गौः ।
आविञ्छागलकश्चैव क्रमशो दक्षिणाः स्मृताः ॥
प्रत्यक्षं प्रतिमासञ्च प्रत्यब्दं वा विधानतः ।
वर्णिभिश्च ग्रहाः पूज्या राजभिस्तु सदैव हि ॥
दुःखितो यस्य यस्तु स्यात् पूज्यस्तस्य स यत्नतः ।
वेधसैते नियुक्ताः प्राक् स्वभक्तं पूजयिष्यथ ॥
वरं ददाति संहृष्टा विप्रा अग्नि र्नृपा ग्रहाः ।
असन्तुष्टा दहन्त्येते तस्मात्तानर्चयेत्सदा ॥
ग्रहाधीन मिदं सर्वं उत्पत्तिप्रलयात्मकम् ।
जगत्यभावभावौ च तस्मात्पूज्यतमा ग्रहाः ॥
सानुकूले ग्रहैर्यानि कुर्यात्कर्माणि मानवः ।
सफलानि भवन्त्यस्य निष्फलानि स्युरन्यथा ॥
कुर्वन्ति चैतद्विधिना ग्रहाणा मातिथ्यमब्दं प्रतिवासरं ये

आरोग्यदेहा धनधान्ययुक्ताः दीर्घायुषः स्त्रीरतगा भवन्ति ॥

इति श्रीवृद्धपाराशरीये धर्मशास्त्रे ग्रहशान्तिर्नाम नवमोऽध्यायः ।



वसेत्तु कस्मान्मदनेष्वतोऽद्भुतं वयोवसेयुर्यदरण्यवासिनः ।
विशेषतो गृध्रकपोतपिङ्गलास्तथैव चोलूकसकाकवायसाः ॥

तरक्षुगोमायुमृगायुगोभि-
र्हि धाष्यकस्मादकुतोऽपि निर्भयः ।
विशन्ति यत्त्वेतदतीव चाद्भुतम्
गृहे पुरे तच्छनिकृते हि सिद्धये ॥

अथाद्भुतानि जायन्ते वर्णानां गृहमेधिनाम् ।
नानाविधानि तेषान्तु प्रशान्त्यै शान्तिरिष्यते ॥
यस्याद्भुतानि जायन्ते गृहे तस्य समादिशेत् ।
धनधान्यक्षयो वापि पुत्रभार्याक्षयस्तथा ॥
भयम्वा जायते शत्रो राज्ञो वा जायते भयम् ।
शान्तिस्तत्र विधातव्या यथोक्तं मुनिपुङ्गवैः ॥
यदि गोधूमशाखायां यवशाखोपजायते ।
यवगोधूमशाखाश्च देवसर्वाशनेषु च ॥
सर्षपे तिलशाखा च तिले शाखासु सर्षपम् ।
माषे मुद्गस्तु मुख्ये स्यात् अदृग्वृष्टिर्भवेद्यदि ॥
अम्भः पूर्णे तु कुम्भेतु ज्वलदग्निमवेक्षते ।
उद्दपनन्तु कूपानां मक्षो वा मधुजालकम् ।
विधिवद्वायुलिङ्गैश्च निर्वाप्य पायसं चरुम् ॥
महावाताय वाताय तद्दद्यं प्रशाम्यतु ।

त्रिपञ्चसप्त वा कृत्वा सर्वत्र स्यात्र तुल्यता॥
स्त्रियो गौर्वा महिष्यावा सुतौ वत्सौ च पाण्डकौ।
द्वौ द्वावाप्सु प्रजायेते तत्र शान्तिर्विधीयते ॥
वृषवह्नोह्ययं नर्देत् वडवाश्ववदाचरेत्।
अश्वतरी प्रसूते वा प्रस्वेदः प्रतिमासु च ॥
मृदङ्गपटहादीनामकुतोऽपि ध्वनिर्यदा।
काकगृध्रकपोताद्याः प्रविशेयुर्गृहे पुरे ॥
यवपिष्टेन निर्लिप्य विधिवद्वारुणं वरम्।
मन्त्रैर्वरुणदैवत्यै र्जुहुयाद्वरुणाय तम् ॥
महावरुणदेवाय स्वपाम्पतये तथा।
अन्यैर्वरुणदैवत्यैर्मन्त्रैश्च जुहुयाच्चरुम् ॥
विप्रस्तु जुहुयान्मन्त्रैरेतेन वरुणाय तम्।
अन्यस्य तुल्यतां कृत्वा स्वाहान्तैर्वरुणदैवतैः ॥
इन्द्रचापेक्षणं रात्रौ शस्त्रप्रज्वलनन्तथा।
गजस्य शफदन्तान्तज्वलनं प्रतिवीक्षणम् ॥
स्थूणाप्ररोहणं यत् स्याद्भाण्डस्थानप्ररोहणम्।
विद्युन्निर्घातवज्राणां पतनं वा भवेद्यदि ॥
मृदाकुङ्काकसंसर्गं विपरीतप्रदर्शनम्।
शमाय चरुराग्नेयो निर्वाप्यो विधिवद्द्विजैः ॥
अग्नये त्वग्निराजाय महावैश्वानराय च।
हृदये मम यच्चेतत्सर्वत्र च वदेद्बुधः ॥
गृहशान्तिश्च सर्वत्र शनिपूजा तथैव च।
दक्षिणा सवृषा गौस्तु वस्त्रयुग्मं द्विजातये।

एतेषु चान्येष्वपि चाद्भुतेषु जातेषु सावित्रजपं सहस्रम्।
होमं विदध्यादपि विष्णुमन्त्रै ब्रह्मेशमन्त्रैरपि वा द्विजोत्तमैः॥

इति श्रीबृहत्पाराशरीये शान्त्यध्याये अद्भुतशान्तिः।

---

अभिधास्येऽथ रुद्राणां शान्तये गृहमेधिनाम्।
यस्नानाञ्च विधानन्तु यत्कृतं हन्ति पातकम्॥
ब्राह्मणा विधिवत् स्नात्वा सर्वोपद्रवनाशनम्।
कुर्युर्विधानं रुद्राणां यजुर्विधाननिर्मितम्॥
इषेत्वादिषु मन्त्रेषु खं ब्रह्म तेषु या क्रिया।
दशप्रणवयुक्तेषु भूर्भुवःस्वरितीति च॥
आर्षच्छन्दश्च दैवत्यं न्यासञ्च विनियोगतः।
पराशरोदितं वच्ये शेषं मुनिविभाषितम्॥
मनोज्योतिरबोध्याग्निमूर्धानञ्च मर्माणि ते।
मानस्तोक इतिच्चेतत्प्रथमं पञ्चकं स्मरेत्॥
याते रुद्रेति वु आयाशिरोऽस्मिन्महदर्णवे।
असंख्यातसहस्राणि ललाटे विन्यसेद्बुधः॥
चक्षुषोर्विन्यसेद्धेतु त्र्यम्बकञ्च यजामहे।
मानस्तोक इति ह्येतन्नासिकायां न्यसेद्बुधः॥
अवतत्य धनुर्वक्त्रे नीलग्रीवाय वा गले।
नस्त आयुध इत्येतत्स्मरे मन्त्रप्रकोष्ठके॥
विन्यसेद्दासुमन्त्रोऽयं ये तीर्थानिति हस्तयोः।
नमोऽस्तु किरिकेभ्यो वै हृदये मलनाशनम्॥
ताभ्यां विद्वान् न्यसेत् पार्श्वं नमो हिरण्यबाहवे।

गह्यमन्त्रस्तु संस्मार्य इमा रुद्राय इत्यपि ॥
मानो महान्त इत्योर्वो एष ते रुद्रेतिशानुनोः ।
अवरुद्रमिति ह्येतज्जङ्घयोर्मन्त्रमुच्चरेत् ॥
कवचे मध्यमेतद्वै तदुपरिस्थित इति ।
नेत्रन्तु नीलग्रीवाय प्रमुञ्चन् मनोऽस्त्रकम् ॥
य एतावन्त एतेन विदध्युर्दिक् प्रबन्धनम् ।
ॐमितिच नमस्कारभवा च ते ततः पुनः ॥
रुद्रायेति विधानज्ञो दशाक्षरन्तदा न्यसेत् ।
प्रणवं विन्यसेन्मूर्ध्नि नकारं नासिकान्तरे ॥
मोकारन्तु ललाटे तु भकारं मुखमध्यतः ।
गकारं कण्ठदेशेतु वकारं हृदये न्यसेत् ॥
तेकारं दक्षिणे हस्ते रुकारं वामतो न्यसेत् ।
द्राकारं नाभिदेशेतु यकारं पादयोर्न्यसेत् ॥
त्रातारमिन्द्रं त्वस्माग्नेसुगन्धः पन्थानमिति स्मरेत्पि ।
तत्त्वा यामि वदेदानो नियुद्भिरित्यपीरयेत् ॥
वयं सोम तमीशानं अस्मैरुद्रा इति स्मरेत् ।
स्योना पृथिवी ह्येतत् कुर्वीत संपुटं द्विजः ।
भुवामादिदिशांपालान् प्राच्यादिषु स्मरेदथ ॥
रौद्रीकरणमेतद्वै कृत्वा पापैः प्रमुच्यते ।
यक्षरक्षःपिशाचाद्याः प्रेतभूतग्रहादिकाः ॥
दुष्टदैत्याश्च शाकिन्यो रेवत्यो वृद्धकाश्च याः ।
सिंहव्याघ्रादयोऽरण्या ये दुष्टश्वापदद्वा निजाः ! ॥
म्लेच्छवञ्चकचोराद्या यमदूतमहाकवः ।
रौद्रभूतमिमं सर्वे द्विजं पश्यन्ति वह्निवत् ॥

देदीप्यमानमर्चिर्भिर्दुष्टदृग्बधकारकः ।
दह्यमानो दवीयः सु सप्तधामसु धामभिः ॥
प्रपश्यन्ति हि ये दुष्टा द्विजास्ते रुद्ररूपिणः ।
पश्चात्पश्येच्च आत्मानं सर्वाभरणभूषितम् ॥
मृगलाञ्छनमूर्धानं शुद्धस्फटिकसन्निभम् ।
फणासहस्रविस्फूर्जदुरगेन्द्रोपवीतिनम् ॥
सप्तार्चिषं ज्वलज्ज्वालं जटाजूटकिरीटिनम् ।
सहस्रकरपादाब्जखट्वाङ्गाङ्गविभूषितम् ॥
ब्रह्माण्डखण्डवत्कारं नृकपालकधारिणम् ।
देदीप्यमानचन्द्रार्कज्वलदग्नित्रिनेत्रिणम् ॥
त्रैलोक्यज्योतिः कङ्कालस्तत्स्कन्धकपालमालिनम् ।
दीप्तनक्षत्रमालाभदक्षमल्लाधरद्विजः ॥
निःशेषवारिसम्पूर्णं कमण्डलुधरं ध्वजम् ।
जगत्व्याधियन्त्रादण्डमेकधारिणम् ॥
केयूरबद्धनागेन्द्रमूर्धमणि विराजितम् ।
विचित्र किङ्किणीं मालां मुक्ताराव विराजितम् ॥
घर्घराव्यक्तनिर्गच्छद्गम्भीरारावनूपुरम् ।
सहेमपट्टनीं लाभ व्याघ्रचर्मोत्तरीयकम् ॥
विद्युल्लताप्रभागङ्गं शुभ्रमूर्धसुरार्चितम् ।
समस्त भुवनाभाव धरणोच्छासनस्थितम् ॥
त्रैलोक्यवनितामूर्धानं तद्देहार्धञ्च पार्वतीम् ।
लक्षसूर्यप्रभाभास्वत् त्रैलोक्यकृतपाण्डुरम् ॥
अमृतप्लुत स्पष्टाङ्गं दिव्यभोगसमाकुलम् ।
दिग्दैवतैः समायुक्तं सुरासुरनमस्कृतम् ।

नित्यं शाश्वत मव्यक्तं व्यापिनं नन्दिनं ध्रुवम् ॥
द्विजो ध्यात्वा भवात्मनं सम्यक् ग्रहस्वरूपिणम् ।
सम्पद्यस्तान्तरायः सन्ततोयजनमारभेत् ॥
अनुलिप्ते सुगुप्ते च देशे गोचर्ममात्रके ।
स्थण्डिलाब्जमालिख्य मन्त्रै प्रक्ष्याल्य तं पुनः ॥
तत्र पूजादिकं कुर्यान्नमश्च शाम्भवाय च ।
मानो महान्त इति च सिद्धमन्त्रं स्मरेद्द्विजः ।
स ललाटे पुनर्ध्यात्वा तेजोरूपं पुनर्द्विजः ।
दशाक्षरेण मन्त्रेण दद्यात्पाद्यादिकौ पुनः ॥
न्यासमन्त्रैश्च सोङ्कारैर्मानस्तोक इति स्वपि ।
शम्भवे इति मन्त्रेण दद्याद्गन्धोदकादिकम् ॥
पुष्पधूपश्च दीपादि यथालाभं निवेदिकम् ।
दत्वाक्षरेण तेनैव ततः कुर्यात् पुनर्द्विजः ॥
शिवा तस्य तु रुद्रस्योत्तरनारायणं द्विजः ।
शिरः पुरुषसूक्तञ्च शिवसङ्कल्पहृद्यक्रत् ॥
कवचञ्चाप्रतिरथ नेत्रविभ्राट् बृहत्त्रिवत् ।
शतरुद्रीयमन्त्रेण देवस्यास्त्रं प्रकल्पयेत् ॥
पञ्चाङ्गानि स्मरेद्दृष्टप्रणवं पूजयेद्द्विजः ।
उद्धृत्य प्रणवेनैवं विकिरन्त्रेति विसर्जयेत् ॥
रुद्ररूपी द्विजो यश्च कुर्यात्तद्विच रिष्यति ।
अक्षतान्वा तिलान्वापि यवान्वा समिधोऽपि वा ॥
शम्भवे इति जुहुयात् सर्वांस्तानाज्यसिक्तकान् ।
पञ्चपञ्चाथ षड्वाथ अष्टावष्टौ तथापि च ॥
दशदशैकादश वा जुहुयात्साधको द्विजः ।

द्विजः स्वदारसन्तुष्टः शुचिः स्नातो जितेन्द्रियः ॥
जपतर्पणहोमादौ रतो यो वत्सरं जपेत् ।
दशानामश्वमेधानां फलं प्राप्नोति वै द्विजः ॥
सौवर्णं पृथिवीदान पुण्यभावः प्रजायते ।
महापापोपपापैश्च मुक्तो रुद्रत्वमृच्छति ॥
एकादशगणान् रुद्रानावर्त्य याति रुद्रताम् ।
रुद्रजापी शुचिः पुण्यः पाङ्क्तेयः स्वात्मभास्वरः ॥
वंशानां विंशतिश्चैकान्तारयेद्रुद्रजाप्यकृत् ।
एकतो योगिनः सर्वे ज्ञातिभिः सह सव्रतैः ॥
एकतो रुद्रजापी तु मान्यः सर्वैस्तु दैवतैः ।
पात्रमत्र पवित्रञ्च नाधिकं रुद्रजापिनः ॥
तस्मै दत्तं हुतञ्चक्तन्तदानन्त्याय कल्पते ।
अथातः सिद्धिकामः सन् कन्दमूलफलाशनः ॥
गोमूत्रयावकक्षीर दधिशाकान्न भोजनः ।
हविष्यभोजनो वापि विप्रायोत्पन्नभोजनः ॥
जपहोमादि कुर्वाणो यथोक्तफलभाग्भवेत् ।
शिरः साक्षाच्च रुद्राणां जपैर्दशशतैर्ध्रुवम् ॥
सर्वे मन्त्रा भवन्त्यस्य ब्राह्मणस्योक्तकारिणः ।
सिद्धमन्त्रा भवन्त्यस्य चिन्तितार्थफलप्रदाः ॥
रुद्रस्यैवास्य सर्वे ते भवन्तीश्वरनोदिताः ।
एकादशशुभान् कुम्भानाहृत्य विधिमन्त्रितान् ॥
सहिरण्यान् सवस्त्रांश्च फलपुष्पोपशोभितान् ।
गन्धोदकाद्यैर्युक्तान्नमस्कृत्वाऽभिमन्त्र्य च ।
एकादशमहास्नान मन्यं वा हितकाम्यया ।

विनायकोपसृष्टञ्च स्नापयेत् का पदाहतम् ॥
मृतवत्सां काकवन्ध्यां स्नापयेच्च तथातुराम्।
जपन्नेतत्सकृद्विप्रः सर्वदोषैर्विमुच्यते ॥
अनड्वाहञ्च वस्त्रञ्च दद्याद्धेनुञ्च दक्षिणाम्।
भोजयेद्विदुषो विप्रान् समाप्तौ कर्मणो द्विजः ॥
भक्त्यैकादशवस्त्राद्यैर्यथाशक्त्या समर्चयेत्।
अथवा बहुभिः साक्षी शिरो रुद्रसहस्रकम् ॥
जपेद्गोष्ठे तथारण्ये शिरश्छे च शिवालये।
अग्न्यागारे समुद्रे च नदीनिर्झरपर्वते ॥
जपेदन्यत्र वा विद्वान् शुचौ देशे मनोरमे।
धीरो दृढव्रतो मौनी जितक्रोधो जितेन्द्रियः ॥
श्वेतवासास्त्वधःशायी रुद्रलोके महीयते।
नमो गणेभ्य इत्यस्य मन्त्रस्य ब्राह्मणोऽयुतम्।
जप्त्वा च श्रीफले हुत्वा सर्वकार्य्ये तु सिद्धिभाक्।
नमोऽस्तु नीलग्रीवायेत्येतन्मन्त्रेण सप्तधा ॥
आवर्त्त्योदकमामन्त्र्य विषार्त्तश्रवणे जपेत्।
विषेण मुच्यते सद्यः काकदष्टोऽपि जीवति ॥
विषस्यापि भवेन्न स्यात्तस्य नरस्य कर्हिचित्।
ग्रहग्रस्तं ज्वरग्रस्तं रक्षःशाकिनि दूषितम् ॥
ब्रह्मराक्षसग्रस्तञ्च अन्यदोषोपदूंहितम्।
प्रमुञ्चन् धन्विन इति मन्त्रेना सर्षपैस्तथा।
ताडयेन्मुञ्च मुञ्चेति शीघ्रमेव विमुच्यति ॥
नमः शम्भव इत्यस्य मन्त्रस्यापशुभं द्विजः।
जप्त्वा खादिरसमिद्धाश्च हुत्वा विप्रः सहस्रकम्

तीक्ष्णतैलप्लुतं सम्यक् मन्त्रान्ते मोचनम् ...म्।
फट्कारेण च जुहुयात् तयोरेवाचिराद्भवेत्॥
जलमध्ये शतावर्त्या सद्योवृष्टिर्निगद्यते॥
नाभिमात्रे जले विप्रः प्रविश्य जुहुयाज्जलम्।
कुर्यादेकार्णवां धात्रीं मन्त्रमाहात्म्यतो भृशम्॥
नमः स्वभ्य इत्यनेन मन्त्रेण तु सहस्रकम्।
लवणं मध्वाहुतीनान्तु राजा शीघ्रं वशी भवेत्॥
द्विगुणाम्लाशसमिधं महावाणी प्रजायते।
त्रिगुणं नवपद्मानां पाताले सिद्ध्यति ध्रुवम्॥
चतुर्गुणेन मन्त्रेण वरदा श्रीः प्रजायते।
समुद्रगा नदीतीरे पुलिने वा पवित्रके॥
खड्गोपरि श्रीफलानां हुत्वा त्रिगुणसहस्रकम्।
अणिमादिकसिद्धीनामेभिरेव भवेद्द्विजः॥
छन्दोदैवतमार्षेयमथातः शतरुद्रिये।
ज्ञानेन कर्मसम्पत्त्वं द्विजानां येन जायते॥
आद्यानुवाके रुद्राणां आद्यायाश्च क्वचिद्द्विजः।
छन्दोगायत्र्यमन्यासु अनुष्टुप्तिसृषु स्मरेत्॥
पङ्क्तिस्तिसृषु विज्ञेया अनुष्टुप् तिसृषु स्मृताः।
द्वयोश्च जगती विप्र उक्तमद्यानुवाककम्॥
आद्यानुवाके प्रथमा वृहती जगती तथा।
अनुष्टुप्च तृतीयायां द्वयोस्त्रिष्टुप् स्मृता द्विज!॥
अपरासु तथाऽनुष्टुप्सु अनुवाकद्वयं स्मृतम्।
रुद्रः सर्वासु देवत्वं विनियोगो यथोचितः॥
यज्जाग्रतादि षट्केच शिवसंकल्पमार्षकम्।

रुद्रस्तु देवता षट्सु विनियोगो जपादिषु ॥
अङ्गाः सम्भृत इत्यादौ उत्तरनारायणस्त्वृषिः ।
पूर्वानुवाके दैवत्यं अनुष्टुप्छन्दः प्रकीर्त्तितम् ॥
आशु शिशान इत्यादिरप्रीतिरथ उच्यते ।
एतन्नाम्ना मुनिस्तत्र देवतामरेश्वरः ॥
दैवत्यमापतेत् स्यात छन्दस्त्रिष्टुप् प्रकीर्त्तितः ।
विभ्राट् बृहदित्यादौ सूर्यो दैवतमुच्यते ॥
एतत्सञ्चिन्त्य सकलं द्विजाग्र्यो रुद्रजाप्यकृत् ।
यद्यदारभते तत्तद्यथोक्तफलदम्भवेत् ॥
तदा ध्यायन् यन्त्रितृणां आज्ञानान्द्रविणस्य च ।
प्रजानामायुषः कीर्त्तिभूयस्त्वं रुद्रजापिनः ॥
इमं पुण्यं पवित्रञ्च रहस्यं पापनाशनम् ।
रुद्रविधिं विधिश्रेष्ठ ! कुर्याद्विप्रः शिवे रतः ॥

कुर्याद्य एवं विधिवद्विधानं शम्भोरजस्रमयितं द्विजेन्द्रः ।
प्राप्नोति नाकं स शिवस्य साक्षात्तदापि स स्याच्छिववल्लभः
मन्त्राणि सर्वाणि च स द्विजस्य स्यादेशकर्तृणि भवन्ति य
यः साधयेत्प्रोक्तविधानयन्त्री मन्त्राभिपूज्यः स तु शम्भुवत्स्यात्
इति श्रीबृहत्पाराशरीये शान्त्यध्याये रुद्रशान्तिः समाप्त

---

मन्त्रन्त्रिनेत्रं जुहुयाद्धुताशे योबिल्वपत्रैर्घृतदुग्धयुक्तैः ।
मृत्युञ्च हत्वा श्रियमेव ध्यात्वा प्राप्नोति पश्चाच्छिवलोकमे
पञ्चभागास्तथा पञ्च पञ्चेन्द्राः पञ्चवारुणम् ।
पञ्चाहुतीर्जपित्वाथ सर्वपापैः प्रमुच्यते ॥

अथातः सम्प्रवक्ष्यामि तटागेष्टिविधिं शुभम्।
येन कृतेन तेषान्तु प्रतिष्ठा सा प्रजायते॥
अस्मात्तातस्य तातेन पृच्छति रघुपुङ्गवे।
तटागाद्युत्सवविधिः प्रोक्तो सोऽयं प्रकीर्तितः॥
दीर्घिकासु तटागेषु सन्निहितासु यो विधिः।
वशिष्ठः प्रोक्तवान् सम्यक् दशरथस्य पृच्छतः॥
तस्माद्यः श्रुतवान् शक्तिसूनवेऽतः पराशरः।
तत्प्रसादेन तत्प्रोक्तो योविधिः संप्रवक्ष्यते॥
तटागादिनिपातानां यावदुत्सर्जनं कृतम्॥
तावन्न परकीयन्तु स्नानादीनामनर्हकम्।
अप्रतिष्ठितदेवानां न कार्यं पूजनं यथा॥
अप्रतिष्ठितपाथानां प्रोक्तन्तोयमपेयवत्।
तदुत्सर्गः प्रकर्तव्यो निजवित्तानुसारतः॥
वित्तशाठ्यं न हेयं स्यादित्यब्रवीत्पराशरः।
तद्विधिज्ञः शुचिः शान्तो ब्राह्मणो धर्मवित्तमः॥
तत्कृत्यर्थं वरेण्योऽसौ चतुर्भिर्ब्राह्मणैः सह।
सतोयं न तु कर्त्तव्यः प्रतिधर्मविदृद्धये॥
विपरीतमतिर्यः स्यात् तत्कृतं कर्म निष्फलम्।
तटाकपालिपृष्ठेतु मण्डपं तत्र कारयेत्॥
पूर्व्वोत्तरद्रवे देशे शुभे शौचसमाहितः।
चतुरस्रं चतुर्द्वारं दशहस्तप्रमाणतः॥
सार्द्धहस्तप्रमाणेन तोरणानि तु कारयेत्।
कार्य्याः विचित्राः पताका नानावर्णाः समन्ततः॥

शुभपञ्चभसंयुक्ता द्वारेषु कलशाः स्मृताः।
यथावर्णं यथाकाष्ठं यथाकार्य्यं प्रमाणतः॥
तथा यूपान् प्रवक्ष्यामि सर्वेषां हितकाम्यया।
पालाशो ब्राह्मणस्योक्तो न्यग्रोधः क्षत्रियस्य च॥
वैल्वो वैश्यस्य यूपः स्याच्छूद्रस्योदुम्बरः स्मृतः।
शिरः प्रमाणं विप्रस्य स्यात्कण्ठं क्षत्रियस्य च॥
उरःप्रमाणं वैश्यस्य शूद्रस्य नाभिमात्रकम्।
यूपस्य दक्षिणे भागे तोरणं तत्र कारयेत्॥
ब्रह्मस्थानञ्च तन्मध्ये अष्टौ भागाः प्रकीर्त्तिताः।
तेषामुत्तरतः सोमं कुबेरं कुविदङ्गतम्॥
धनदं धननागेति ईशावास्येति शङ्करम्।
आकृष्णेनेत्यादिमन्त्रैश्च स्वैः स्वैः कल्प्यास्तथा ग्रहाः॥
त्रातारमिन्द्रमितीन्द्रं अग्निदं ते च पावकम्।
अग्निमूर्द्धेत्यादि धर्मज्ञ द्विजोत्तमः॥
तद्विष्णोरिति वै विष्णुं नमः सूर्येति नैर्ऋतम्।
सप्त ऋषय इत्यादि मन्त्रेण सप्त ऋषिस्तथा॥
वरुणस्योत्तम्भनमसि वरुणन्तु प्रकल्पयेत्।
एतद्वा त्रिंशतिः स्थाना निमन्त्रकाः पृथक् पृथक्॥
इमं मे त्वन्नमस्त्वन त्वत्वायामि स्वनुत्तमम्।
समुद्रोऽसि समुद्रेति त्रीन् समुद्रानिति स्मृति॥
दशवारणमन्त्रैस्तु आहुतीनां शतद्वयम्।
अष्टशतं शतं वापि विंशमष्टोत्तरं शतम्॥
गोसहस्रशतं वापि शतार्द्धं वा प्रदीयते।
अलाभे चैव गां दद्यादेकामपि पयस्विनीम्॥

अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्।
सौवर्णाराजताास्ताम्राः कांस्याः सीसाश्च शक्तितः॥
मत्स्यनक्रादयः कार्य्या विविधाः पूर्वंकृद्ये।
गोवत्सौ वस्त्रवद्धौ च आग्नेय्यां दिशि संस्थितौ॥
वायव्यभिमुखौ तत्र तारयेद्वारिमध्यतः।
वस्त्रयुग्मानि त्रिः स्थाप्य छत्रिकामुद्रिकां शुभाम्॥
शक्त्यान्वितैः प्रदातव्यं विप्रान् प्रसाद्य भक्तितः।
दद्याद्विप्रेभ्यः सन्तोष्य कृतोपानहमेव च॥
सुहेम पुरुषसंयुक्तां शय्यां दद्याच्च शक्तितः।
आसनानि च शस्तानि भाजनानि निवेदयेत्॥
एतत्प्रदक्षिणीकृत्य स्वात्मना च विपश्चितः।
प्रसादयेद्विजान् भक्त्या इष्टापूर्त्तं फलं नरः॥
कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः।
ब्रूयादेवं भवन्तोऽत्र सर्वे विप्रत्रपुर्धराः॥
तद्यूयं तारयध्वं मां संसारार्णवतो द्विजाः!॥
आगता मम पुण्येन पूर्वपुण्यप्रसाधकाः।
कूर्मश्च मकरांश्चैव सौवर्णं तत्र कारयेत्॥
मीनश्च राजतश्चैव ताम्रदर्दुरकाः स्मृताः।
जलकुम्भचराश्चांश्च सैन्धवांस्तत्र प्रकल्पयेत्।
अन्ये च जलजास्तत्र शक्त्या ताम्रान् प्रकल्पयेत्॥
इमं पुण्यं पवित्रञ्च तटाकादिविधिं नरः।
खातयित्वा तटागानि स्वभावात् सम्प्रवर्जिताः॥
मानवः क्रीडते स्वर्गे यावदिन्द्राश्चतुर्दश।
एतद्विधानं विदधाति भक्त्या सर्वेषु खातेषु तड़ागकेषु।

सर्वैश्च कामैः परिपूर्णदेहो भुङ्क्ते धरित्र्यामपि सर्वभोगान्॥
वदान्ति केचिद् वरुणस्य लोके प्रयाति लोकान् वरुणस्य कुर्म।
संपूज्यतां तत्र पुनर्धरित्र्यां नरेन्द्रतामेति पराशरोक्तिः॥

इति श्रीबृहत्पाराशरीये शान्त्यध्याये वापीकूपतडागादि शान्तिविधिः समाप्तः।

---

अथातः सम्प्रवक्ष्यामि नरेन्द्राः! श्रूयतामयम्।
लक्षहोमविधिः पुण्यः कोटिहोमविधिस्तथा॥
स्वयम्भूर्यमुवाच प्राक् सुमन्तात् पितामहः।
तमिमं सम्प्रवक्ष्यामि श्रूयतां पापनाशनम्॥
ये वेद ब्राह्मणाः कार्य्याः भूमिर्या वस्तु सर्वशम्।
समिधो याश्च मन्त्राश्च अन्यच्च तत्र यज्ञवित्॥
लक्षहोमविधिं विप्राः! कथ्यमानं निबोधत।
युग्माश्च ऋत्विजः कार्य्या ब्राह्मणा ये विपश्चितः॥
नियमव्रतसम्पन्ना मर्हिताः पार्थिवेन तु।
नित्यं जपपराश्चैव नियोज्यास्तादृशा द्विजाः॥
कन्दमूलफलाहाराः दधिक्षीराशिनोऽपि वा।
प्रागुदक् पूर्वदेशेषु समे स्थण्डिलमेव च॥
तत्र वेदिं च कुर्वीत पञ्चहस्तसमन्वितम्।
दक्षिणोत्तर आयामे त्रिंशत्तु पूर्वपश्चिमे॥
कुण्डानि खनितव्यानि षडङ्गुल्या नैकविंशतिम्।
निधापयेद्विरच्यच्च वस्त्राणि विविधानि च॥
सिकता परिदेया च तत्राप्यग्निं समिन्धयेत्।
आज्यभागाहुतीर्हुत्वा न वाहुत्या च संमृजेत्॥

अग्निं सोमञ्च सूर्यञ्च विष्णुञ्चैव प्रजापतिम्।
विश्वेदेवान् महेन्द्रञ्च मित्रं स्विष्टिकृतं तथा॥
दधिमधुघृताक्तानां समिधाञ्चैव यज्ञिनाम्।
होमयेच्च सहस्रञ्च तत्र चैव यथाक्रमम्॥
चतुर्विंशति गायत्र्या मानस्तोकेति षड् तथा।
विंशच्छताभिमन्त्रैश्च चत्वारि विष्णुदैवतैः॥
कुष्माण्डैर्जुहुयात्तच्च विकिरेद्दाश षोड़श।
जुहुयाद्दशसहस्राणि जातवेदस इत्यृचे॥
पञ्चसहस्राणि जुहुयात् जुहुयादिन्द्रदैवतैः।
कुम्भे शतसहस्रे तु अभिषेकन्तु कारयेत्॥
पूर्णाभिषेकं यत्प्रोक्तं तदुक्तापि शुभप्रदम्॥
अथवा षोड़शं कुम्भैः सच्छिद्रैः समङ्गलैः।
सर्वौषधिसमायुक्तैः सर्वरत्नविभूषितैः॥
अभिषेकं ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः।
हयाश्वरथयानानि भूमिवस्त्रै युगानि च॥
अजञ्च गोशतं हेम ऋत्विजाञ्चैव दक्षिणाम्।
वृषाणेकादशैवात्र दश दद्याच्च धेनवः॥
अशक्त्या वा प्रदद्याद्गां वित्तशाठ्यं विवर्जयेत्।
एवं कृते तु यत्किञ्चिद् ग्रहपीड़ासमुद्भवम्॥
भौममाकाशजं वापि अन्यद्वा यदि जायते।
तत्सर्वं कुम्भहोमेन प्रशमं यात्यसंशयम्॥
शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते।
दृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसंक्षयः॥
इति श्रीहस्तपाराशरीये कुम्भहोमविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः!।
श्रूयतामादरेणायं सर्वकामफलप्रदः॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजा यागकर्मणि।
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये।
कार्यश्चैव विशेषेण ग्रहयागविधिर्विदः!॥
एकाङ्गविकलो विप्रो धनधान्यापहारकः।
सर्वाङ्गविकलो यत्तु यजमानं स हिंसति॥
वर्ज्यः सर्वप्रयत्नेन विधिमन्त्रविदृद्विज!।
कार्यश्चैव विशेषेण ग्रहयज्ञस्य विद्द्विजैः॥
ग्रहाः फलन्तु साङ्गाश्च सुराश्चैव नरेश्वराः!।
अधोर्ध्वं येच मन्त्राणां कृत्वा चाष्टोत्तरं शतम्॥
स एव ऋत्विग्विज्ञेयः सर्वकामफलप्रदः।
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः॥
एवं कृते तु यत्किञ्चिद्ग्रहपीडासमुद्भवम्।
तत्सर्वं नाशयेत्येव कृतघ्नः सौहृदं यथा॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा।
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च॥
पूर्ववद्ग्रहदेवाना मावाहनविसर्जने।
होममन्त्रास्त एवोक्ताः स्नानदानस्तथैव च॥
मण्डपश्चैव वेद्याश्च विशेषश्च निबोधत।
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम्।
द्व्यङ्गुलोद्धृतकार्याच प्रथमा मेखला बुधैः॥
त्र्यङ्गुलैवद्धृतातद्वद्द्वितीया मेखला स्मृता।

द्व्यङ्गुले मेखला या तु तृतीया चतुरङ्गुला ॥
त्र्यङ्गुलस्तत्र विस्तारः पूर्वयोरेव शस्यते।
वितस्तिमात्रा योनिः स्यात् षट्सप्ताङ्गुलविस्तृता ॥
कूर्मपृष्ठोन्नतं मध्ये पार्श्वतश्चाङ्गुलोच्छ्रिता।
गजोष्ठसदृशा तद्वदायामाच्छिद्रसंयुता ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमुच्यते।
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभाम् ॥
वेदीच कोटिहोमे स्यान्मण्डपस्य चतुर्मुखः।
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदस्तथा याम्ये पश्चिमे सामवेदिनम्।
अथर्ववेदं तद्वच्च उत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेदवेदाङ्गवेदिनः।
एवं द्वादशविप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत् पूजयेद्भक्त्या सर्वाभरणभूषितैः।
रात्रिसूक्तञ्च रौद्रञ्च पावमानन्तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पठमानोऽप्युदङ्मुखम्।
सौक्तं रौद्रञ्च सौम्यञ्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम्।
सौपर्णमथ वै राज्य माग्नेयीं रुद्रसंहिताम् ॥
ज्येष्ठसामन्तथा शान्तिं छन्दोगं पश्चिमे जपेत्।
पञ्चभिः सप्तभिर्वाथ होमः कार्यश्च पूर्ववत् ॥
स्नाने दाने च मन्त्राः स्युस्तएव द्विजसत्तमाः ! ।
वसोर्धाराविधानन्तु लक्षहोमवदिष्यते ॥
अनेन विधिना यस्तु ग्रहपूजां समाचरेत्।

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ।
सर्वपापविशुद्धात्मा पदमैन्द्रं स गच्छति ॥
अश्वमेधसहस्रस्य दश चाष्टौ च धर्मवित् ।
कृत्वा यत् फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ।
नश्यन्ति कोटिहोमेन स्वयम्भूवचनं यथा ॥
प्रपेदिरे तस्य पितामहाद्याः शुभेषु पापेन गरीयसा तान् ।
उद्धृत्य नाकं स नयेद्धि सर्वान्यो लक्षहोमे हृपतीरतः स्यात् ।
राष्ट्रं मनोवाञ्छितदृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ।
निर्द्वन्द्वनीरोगमदस्य तस्माद्भूयो लक्षकोटीहवनं विदध्यात् ॥
यो लक्षहोमं विदधाति भूभृत् तस्याप्यलक्ष्यं शतहोमकः स्यात् ।
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान् विजयं धरित्रीम् ॥
यो ब्रह्मघाती गुरुदारगोऽपि ग्रामाधिकाशीद्धवपापयुक्तः ।
राजा स मुक्तः शतलक्षहोमाग्निः शेषपापैर्विबुधत्वमेति ॥
तस्मात्तदा भूपतयो विदध्युर्बुधैः प्रजासौख्यकरस्य पुष्ट्यै ।
आयुःप्रवृद्धौ विजयाय कीर्त्यै लक्षकोटिं ग्रहयागमेतम् ॥
इति श्रीबृहत्पाराशरीये कोटिहोमः सम्पूर्णः ॥

---

अथो अन्यत्प्रवक्ष्यामि विधिस्नानमनुत्तमम् ।
अप्रजातप्रतातोऽयं रघुपुत्राय धीमते ॥
अनपत्यस्य पुत्रार्थं कुर्याद्वैमाण्डिकं स्वयम् ।
सहस्रशीर्षसूक्तस्य विधानश्चरुपाककम् ॥

यैर्यैः कृतं नृपैः पूर्वैरन्यैरपि द्विजोत्तमैः ।
उपासितन्तु सङ्गक्त्या श्रोत्रियैर्वेदपारगैः ॥
आत्मविद्भिर्निराहारैर्व्रीहिभिर्मन्त्रउत्तमैः ।
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठान्न धनात् स्नानात् नात्मनः प्रतिपादनात् ।
प्रोक्तस्य कर्मणः पुंसां सर्वा भवन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ।
द्वादश्यां पुत्रकामाय संकुर्वन्ति च वैष्णवम् ॥
दम्पत्योरुपवासश्च स्येकादश्यां सुरालये ।
ऋग्भिः षोडशभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत् पुत्रकाम्यया ।
प्राप्नुयाद्वैष्णवं पुत्रं चिरायुः सन्ततिक्षमम् ॥
द्वादश्यां द्वादश सम्यग् विधिवन्निर्वपेद्बुधः ।
यः करोति द्रुतं याति स विष्णोः परमं पदम् ॥
हुत्वाज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा ।
समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात् पुनः ॥
उपस्थानं ततः कुर्यात् ध्यात्वाच मधुसूदनम् ।
हविर्होमं पुनः कृत्वा जुहुयाच्च हुताहुतीः ॥
हविःशेषं नमस्कृत्य नारी नारायणं पतिम् ।
संप्राश्य च हविःशेषं लघ्वासीत वसेद्गृहे ॥
ततः कृत्वा इदं कर्म कर्तव्यं द्विजतर्पणम् ।
रजः स्त्रीषु निवर्तेत यावद्गर्भं न विन्दति ॥
असूता मृतपुत्रा वा यावत्कन्या प्रसूयते ।
क्षिप्रं सा जनयेत् पुत्रं पराशरवचो यथा ॥

होमान्ते दक्षिणान्दद्यात् धेनुं वाससा तिलान्।
भूमिं हिरण्यं वस्त्राणि यथासम्भवमेव वा॥
यः सिद्धमन्त्रः सततं द्विजेन्द्राः! संपूज्य विष्णुं विधिवत्सुतीर्थैः।
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात्॥
इति श्रीबृहत्पाराशरीये शान्त्यध्याये पुत्रकामोऽयं पुरुषसूक्तविधिः सम्पूर्णः॥

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्रोऽधिदैवतम्।
आर्षं छन्दश्च यज्ज्ञानात्कर्म स्यात्समलङ्कृतम्॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्यं सविता मतः।
ऋषिर्हिरण्यरूपाख्यं त्रिष्टुप्छन्दः प्रकीर्तितम्॥
आप्यायस्वेति सोमोऽत्र दैवतं गौतमो मुनिः।
गायत्रीछन्द उद्दिष्टं विनियोगो यथोदितम्॥
अग्निमूर्द्धेति मन्त्रोऽत्र दैवतं भौममुच्यते।
विरूपाक्षो मुनिर्धीमान् छन्दो गायत्र्य मिष्यते॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम्।
मुनिर्बुधश्च मन्त्रस्य त्रिष्टुप्छन्दः प्रकीर्तितम्॥
शुक्रत्वमिति चोत्पत्र शुक्र इत्यधिदैवतम्।
शुक्रस्यापि तथार्षञ्च विराट्छन्दः प्रकीर्तितम्॥
शन्नो देवीतिचेत्यत्र शनिर्दैवत मुच्यते।
सिन्धुर्नाम मुनिर्विद्वान् छन्दोगायत्र्य मुच्यते॥
काण्डात्काण्डादिभिर्मन्त्रस्य राहुर्दैवत मुच्यते।
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप्छन्दः प्रकीर्तितम्॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि।
मधुच्छन्दस आर्षञ्च गायत्र्यं छन्द एव हि॥

स्योना पृथिवीत्यत्र स्कन्दस्य देवता स्मृता ।
इन्द्रकुत्सेति दैवत्य मिन्द्र एव स्मृतो बुधैः ॥
आर्षं तत्सस्य चापुत्र स्त्रिष्टुप्छन्दः प्रकीर्तितम् ।
यस्मिन्नुर्वेति स्येत्यत्र यमोवै देवता परा ॥
ऋषिस्तु कुण्डलो नाम च्छन्दोऽनुष्टुप् स्मरेद्बुधः ।
ब्रह्मजज्ञमित्यत्र च कालो दैवतकं महत् ॥
मुनिर्यमानतुर्नाम त्रिष्टुप्छन्दो विधीयते ।
आयाते मितिच स्यस्यां चित्रगुप्तस्त दैवतम् ॥
आर्षन्तु वामदेवस्य त्रिष्टुप्छन्दो स्मृतो बुधैः ।
अग्निं दूतमितिस्य स्यादग्निर्वै देवता स्मृता ॥
आर्षं मेधातिथेरत्र च्छन्दोगायत्र्यमेवं हि ।
अस्यस्तु सोम इत्यत्र सोमं वैदैवतं स्मरेत् ॥
मेधातिथिरिहार्षकोऽनुष्टुप्छन्दस्य उच्यते ।
भूतिपृथिव्यन्तरिक्ष मित्यत्र दैवतं स्मृतः ॥
ऋषिः शातातपः प्रोक्ता छन्दश्चानुष्टुप् कुवच्यते ।
पुरुषसूक्तस्य दैवत्यं पुरुषेच स्मृतं बुधैः ॥
आर्षं नारायणस्येह छन्दस्यानुष्टुबित्यपि ।
इन्द्रोपिन्द्रो मरुत्वन्तो मरुत्वान्दैवतं महत् ॥
आर्षन्तु काश्यपस्येह गायत्र्यच्छन्दएव हि ।
मरुत्वमित्यत्रबुधैः सुरेन्द्रो देवता मता ॥
अत्रापि काश्यपस्यार्षं गायत्र्यच्छन्दएव हि ।
उत्तानपर्णे मित्यत्र इन्द्रो दैवत मुच्यते ॥
आर्षं शाङ्खस्य चैवोक्तम् अनुष्टुप्छन्द इत्यपि ।
प्रजापते इति प्रोक्त देवता च प्रजापतिः ॥

हिरण्यगर्भस्यार्षन्तु त्रिष्टुप्छन्दो मतं बुधैः।
आयं गौरिति स्यात् देवता पूजने मता॥
सर्पराजमुनिस्त्वत्र गायत्र्यं छन्द इष्यते।
एष ब्रह्मा ऋत्विज इति ब्रह्मद्विषोऽधिदैवतम्॥
ऋषिर्वै वामदेवोऽत्र गायत्र्यच्छन्द इष्यते।
आत्मघ्नन् इन्द्रदृष्टवत् सुरेन्द्रं धर्मगोश्वरः॥
वामदेवोऽस्य आर्षं गायत्र्यच्छन्द इत्यपि।
जातवेदस इत्यत्र जातवेदास्तु दैवतम्॥
कश्यपस्यार्षमत्रापि छन्दोऽनुष्टुप् प्रकीर्तितम्।
आनोनियुद्भिरित्यग्निन् वायु दैवतमुच्यते॥
आपेह्नात वसिष्ठस्य अनुष्टुप्छन्द एव हि।
नमः प्रकाशदैवत्यं मुनिप्रोक्तं प्रजापतिः॥
गायत्र्यं छन्दसाश्वरं विनियोगो यथोचितम्
ईषो उपेति चात्यत्र अश्विनौ दैवते स्मरेत्॥
प्रस्कण्वस्यार्षमत्रापि गायत्र्यच्छन्द उत्तमम्।
मरुतो यस्य हिप्यस्य मरुद्दैवत मुच्यते॥
गौतमश्च मुनिर्विद्वन्। छन्दसः प्रथमं मुने।
दैवत्य मार्षं मरुच्छन्दसां यो मत्वाद्विजाग्राकुरुते विधान
वेदोक्तमथं भवतिस्म सर्वं सम्यक्फलं कर्त्तुमिहाप्यमुत्र॥
यो लक्षहोमं त्वथ कोटिहोमं राजा विदध्यात्प्रतिवर्षमेक
राष्ट्रे सुवृष्टिर्विजयः सुभिक्षम् आरोग्यता स्यात् सुकृतस्य ना
भवन्ति पुत्राः शुभसन्तति चमाश्चिरायुषो राजहिता भरि
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रविचन्द्र

इति श्रीवृहत्पाराशरीये शान्तिविधिर्नाम नवमोऽध्या

# दशमोऽध्यायः ।

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया ।
पराशरोदितं विप्रा ! वक्ष्यमाणं निबोधत ॥
भूभृत् भूमा परो देवपूज्योऽसौ परदैवकः ।
स विधाता च सर्वस्य रक्षिता शासितापि च ॥
इन्द्रादियमवित्तेशवारीशमातरिश्वनः ।
शीतांशुस्तीव्रभासश्च ब्रह्मादयो द्विजो नृपः ॥
नृपो वेधा नृपः शम्भु र्नृपोऽर्को विष्टरश्रवाः ।
दाता हर्त्ता नृपः कर्त्ता नृणां कर्मानुसारतः ॥
नापृच्छेर्यदि राजानं दण्डं नाप्याचरिष्यतः ।
नामास्या समेष्यतिच नाभविष्यज्जगत्स्थितिः ॥
नाग्रहिष्यन् पुरोडाशाम्मनुष्यपितृदेवताः ।
नाभविष्यत् स्वकाकानां भागधेयं हुतं हविः ॥
विगुणोऽपि यथा पूज्यः स्त्रियाश्च सत्पतिर्भवेत् ।
तथा राजा प्रजानान्तु पूज्यः स्याद्विगुणोऽपि सन् ॥
स्वधर्मस्थान् नृपो लोका नन्यान् पुत्रानिवौरसान् ।
शास्य धर्मविदो दण्ड मधर्मकारिणश्च तान् ॥
दण्डधृतो नरान् कुर्य्याद्धर्मस्थानार्थसाधकान् ।
समर्थानस्रपत्यादौ शूरान् स्वामिहितोद्यतान् ॥
शुचीन् प्रश्नांश्च धर्मज्ञान् विप्रान् मुद्राकराम्वितान् ।
लेखकानपि कायस्थान् लेख्यकृत्तु हितैषिणः ॥
अमात्यान्मन्त्रिणो दूतान्यथोदितपुरोहितान् ।
प्राड्विवाकं सभास्थान्वा हितांश्च रक्षकानपि ॥

शूरानथ शुचीन् प्राज्ञान्परिविश्वासकारिणः।
सर्व्वस्थानेषु चाध्यक्षं सतकृत्य वेदिनोऽपरे ॥
सदायत्तं कुमाराणा मन्तःपूरुषलक्षणम्।
वृद्धानशुचिनो विप्रां स्तुधीननघान्ध भीरुकान्।
यथोदितानि दुर्गाणि कुर्य्युस्ते परिरक्षणम् ॥
उद्वाहमुदितं स्त्रीणां यौवने बन्धुकारणात्।
पुरस्कृत्य च विप्रान मात्मरक्षा च यत्नतः॥
प्रातः सन्ध्यार्चनादूर्द्ध्वं गुडं पुंसवनं स्मृतम्।
यथोक्तकार्य्यं शाठ्ये च नित्यं कुर्य्यात् परीक्षणम् ॥
कोशेभाण्डरयादीनां क्षेतीनां वर्मणामपि।
कुर्य्याच्च दर्शनं नित्य मतन्द्रितो महीपतिः॥
अमात्यमन्त्रयोक्तृणां सम्मन्त्रं नित्यशोऽपि च।
वेदार्थञ्च सदा होमशान्तिश्च वृद्धसेवनम् ॥
यज्ञदानं तथोत्पातं समये शान्तयोऽपि च।
वर्जनं विषयासक्तो भूमिदानस्य शासनम् ॥
अरिचवर्जितदेशे तु नीतिज्ञो मन्त्रकृद्भवेत्।
नित्यमुत्साहयुक्तः स्याद् विजिगीषु रुदायुधः॥
सदालङ्कारयुक्तश्च सदैव प्रियवाक्चयः।
सदाप्रियार्थिने युक्तः पूज्यो नाकेऽप्यसौ नृपः॥
सदा साधुषु सम्मानं विपरीतेषु घातनम्।
दण्डं दण्ड्येषु कुर्वाणो राजेष्टफलमश्नुते॥
वृद्धान् साधून् द्विजान् मौलान् यो न सम्मानयेन्नृपः
पिण्डं कुर्व्वीत नाभीषां भूभृत् क्षिप्रं क्षयं व्रजेत॥
यस्तु सम्मानयेदेतान् नित्यं विप्रांश्च पूजयेत्।

पराजयेत सोऽरातीनजेयोऽप्यपि जायते ॥
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्चोरतस्करैः।
धान्येनाढ्यतोयैश्च सम्पन्नं परमण्डलम् ॥
क्षीणवाहनपुंस्कान्तु मत्वा तत्प्रविशेन्नृपः।
माघे सहसि यात्रार्थी क्षतपुष्यश्च घोषवान् ॥
विधिवद्वाणकं कुर्य्यात् सद्द्वारे रक्षयेद्बलम्।
यत्राचलसरोरक्ष्या वृक्षरक्षातु यत्र तु ॥
वासं तत्र विधायैव रात्रौ रक्षेद्बलं स्वकम्।
चतुर्दिक्षु च सैन्यस्य शूरान्धनुर्धरान्विशि ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम्।
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक्ज्ञात्वा समाचरेत्।
निर्भेदं स्वबलं कुर्य्यात् हन्याच्च भिन्नचेतसा ॥
दासीकर्मकरान् दासान् भिद्यन्ते न यथेनृपः।
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी।
ये ते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत्।
परमात्मविधानानां व्यलीकक्षतशब्दितम् ॥
उत्थापयेत् स्वसेनायाः स्याद्यताचित्तभेदिनः।
परसैन्ये बहून् पातान् विविधान् कुहकानपि ॥
करीषाङ्गारदानादि वह्निपातानमेकशः।
स्वसैन्येऽभवदित्यादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य यष्टुद्रवाणान् मन्तं सर्वं निशामयेत् ॥

अस्तभीरून् वहि: शूरान् साम्मिकान् ब्राह्मणोत्तमान् ।
धर्मज्ञान् कुलसम्भूतान् विदध्याद्दात्मसन्निधौ ॥
प्रविशेत्परदेशे तु प्रजां स्वीकृत्य संविशेत् ।
तत्प्राध्यं मार्गतो दूरीकृत्वापि मार्गतो व्रजेत् ॥
शस्त्राणि दाहयेत्सर्वं सयवानि धनानि च ।
भिन्द्यात्सर्वं निपानानि प्राकारं परिखां तथा ॥
अप्रमत्यमुपादाय भूमिसाधारणं पुनः ।
गमयेद्वार्षिकान् मासानसौ च वसुधाधिपः ॥
न युद्धमाश्रयेत् प्राज्ञो न कुर्य्यात् स्वबलक्षयम् ।
न प्रभेदेन दानेन त्रिभिरेवं वशं नयेत् ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्यागतिका गतीः ।
तद्वलं वशमायाति यथा रिपुस्तथा श्रयेत् ॥
आक्रान्ता दुर्भसूर्योऽपि विद्युद्गुटप्रोपपातनम् ।
न तापित युक्ते च युद्धमिद्धो परसिद्धवत् ॥
स्वस्थस्यात्ययिके देशे युद्धमिच्छेत् स्वधर्मवित् ।
ततः प्रविश्य तद्दूरं भूमियुद्धं समारभेत् ॥
किञ्चित् सुप्तेषु लोकेषु चपायां यद्धमुत्सृजेत् ।
तन्त्रीरवासतोवापि पीडयेत्परसैन्यकम् ॥
व्यूहैर्व्यूह्य योधैर्वा रक्षां कृत्वापि चात्मनः ।
सैन्यकांस्तान् समस्तांश्च नृपो युद्धाय प्रेषयेत् ॥
समानयेत् समस्तांश्च यो वसेदायतो नृपः ।
अभिवृद्धिम् अयतस्मिं तु नीतिज्ञः पृथिवीपतिः ॥
प्रणाशेमापि पत्न्या च शस्त्राणोऽपि च मानवः ।
पुष्पैरपि न युद्धेत युद्धं तत्र विपश्चये ॥

हीनं परबलं मत्वा निरुत्साहमनादरम्।
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत्॥
न हन्यात् मुक्तकेशन्तु नाशयेन्न निरायुधम्।
पराङ्मुखस्य प्रहृतं न तवास्मीति वादिनम्॥
अन्यानपि च विद्वांश्च न हन्यात् धर्म्मयुद्धकृत्।
हन्यान्नरकं याति भ्रूणहत्यासमेनसा॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्त्तते।
तत्पदानीष्टतुल्यानि भूत्यर्थमेकचेतसः॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तविन्दवः।
सोमपानेन तत्तुल्या इति वाशिष्ठजोऽब्रवीत्॥
युद्धन्ते भूभृतो येच भूम्यर्थ मेकचेतस.।
इष्टैस्तैर्बहुभिर्योगैरेवं यान्ति त्रिविष्टपम्॥
येषु एवापरो धर्मो नृपतेर्यद्रणार्जितम्।
वित्तन्दीयेत विप्रे स्यात् प्रजाभ्यश्चाभयं सदा॥
तदा तु वशतां याति स देशो न्यायतोऽर्जितः।
तद्देशव्यवहारेण यथावत्परिपालयेत्॥
रणार्जितेन वित्तेन राजा कुर्य्यान्मखान् द्विजान्।
अर्च्चयेद्विविधविद्वान् सतान् सम्मानयेदपि॥
मातुलः श्वशुरो बन्धु रन्यो वापिच यो जितः।
अदण्ड्यः कोऽपि नो राजा राजनीतिविदो विदुः॥
सुसहायमग्रपादं शूरं प्रजानुरागदम्।
सोत्साहं विजिगीषुश्च भूभृत् क्षिप्रं निवेदयेत्॥
मत्वाचार्य्यवतः सर्वान् नियुक्तार्थनियुग्भवेत्।

सार्थकांश्चैव युञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥
सर्वाख्यपि च वित्तानि यतस्ततोऽपि राजनि ।
नृपस्य यदि जातानि देवद्रव्याणि कोश्वत् ।
आदाय रक्ष्य चात्मानं ततस्तत्र च तत् क्षिपेत् ॥
वित्तं वार्धुषिकाणान्तु कदर्थस्यापि यद्भवेत् ।
पापखिडगणिकावित्तं हरन्नातो न किल्बिषी ॥
देवब्राह्मणपाषण्डिगणका गणिकादयः ।
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥
सप्तार्चिश्चाश्वगोमांसाम् यस्य दृष्ट्यकिल्बिषी ।
गृह्णीयात् सर्वतो राजा करान् यः पीडयेत् प्रजाः ॥
स्तोकं स्तोकन्तु फलकं मांसं भुङ्क्ते चिरन्तराम् ।
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ।
तदैवं हृदि सन्ध्यायन् निश्चलाङ्गो नृपो भवेत् ॥
दैवपुरुषसंयोगे सर्वाः सिध्यन्ति सिद्धयः ॥

नैकेन चक्रेण रथः प्रयाति नचैकपक्षोऽपि चयाति पक्षी ।
एवं हि दैवेन च केवलेन पुंसोऽर्थसिद्धिं नरकारतो वा ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति विधिप्रवीणम् ।
पुंस्कारयुक्तस्य नरस्य केचिदप्यत्र दृष्टा पुरुषार्थसिद्धिः ।

यत्नोद्यमी क्रियतएवच यः श्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ।
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥

नृत्यानि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ।
सर्वपतित्वञ्च शृङ्गारता च सर्वं हि सम्यक् चयमेति दैवात् ॥
किवां हि पुंसां महतो हि दैवात् स्थानस्थितानामपि चार्थसिद्धिः ।
यां प्रभुत्व बहुजीविताच एको हि दैवो बलवानतोऽत्र ॥
स्त्रीप्रयोगादथ युक्तयोगात् तयोर्हि मध्ये विदधाति गर्भम् ।
योगात्तु तत् विप्र ! नचापि पुंसां सर्वाणि चैषां मनुजेश्वरत्वम्
यासात्तु गर्भस्य न सम्भवोऽस्ति कामात्तु शुक्रं नतु वीर्यहीनम् ।
भृत गर्भोऽपि जहाति गर्भं काचिच्च गर्भं न बिभर्ति दैवात् ॥
ाता विधाता निजकर्मयोगाद् विशेषभीष्टं त्वनुभावभाव्यम् ।
वारणानां नच दैत्यकानां स ह्येव कर्त्ता तु मनुष्यकानाम् ॥
ान्मयोनाऽपि सहस्रमध्यां दैवाद्धिमांशोः क्षयरोगता च ।
ात्मयोधौ लवणोदकत्वं दैवाद्भवेच्चित्रतरा च सृष्टिः ॥
न्यमुष्यं न परोऽस्ति दैवात् कुर्य्यात्तथापीह नरो शृकारम् ।
पयेत्कर्मकरो शृकारादुद्दीपितं श्रीरिववै तनोति ।
। केचिच्च हठेन केचित् केचिन् शृकारेण नरस्य चार्थाः ।
ान्ति यत्नेन विधीयमाना ह्येषां प्रधानं नरकारमाहुः ॥
प्रधानं त्वयदुर्गकोशान् दण्डञ्च मित्राणिच नीतियत्नाः ।
नि राज्यस्य वदन्ति सप्त समाश्रयेद्वै नृपतिर्धराभृत् ॥
ासद्वृत्तनरेषु दण्डं राज्ञा विधेयं निपुणार्थसिद्ध्यै ।
च मत्वाऽर्जितवित्तसत्त्वात् हीनार्थ पुंसाय दमन्ति हीनम् ।
यतो ये जननं जनेश्वराः संपीड्य वित्तानि नयन्ति लोभात् ।
ोधवह्नि परिदग्धकायाः क्षीणायुषस्ते तु भवन्ति भूपाः ।
: महाम्मध्यकमध्यमस्तु मानन्तु तस्य त्रसरेणुकादि ॥
ाति साहस्रपणमहान् स्यादर्धादिके चैव तदर्धको वा ।

सर्वार्थपादस्य हरस्य दण्डः पात्यो नृपेणेति वदन्ति सन्तः॥
पाण्यादिपादच्छेदनमारणञ्च निर्वासनं राष्ट्रतएव सन्तः।
ज्ञात्वापराधं मनुजस्य यस्तु देशञ्च कालञ्च वयोवपुश्च॥
दण्ड्येषु दण्डं विदधाति भूभृत्साम्यं स बध्नाति पुरन्दरस्य।
यः शास्त्रदृष्टेन यथा नरेश्वरो दण्डं विदध्याद्विधिवत्कराश्च।
स चैवकीर्तिर्वितनोति गुर्वीरायुश्च दीर्घं दिवि देवभोगान्।
यस्तूक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्वरताश्च लोकान्
आनीय मार्गे विदधाति धर्मे नरेशगीर्वाणगणैः प्रशस्तम्।
अन्यच्च वह्निर्जलवित्तनाथशीतांशुरूपाणि ह बिभ्रतीह॥
सर्वे च भूयश्चिह रूपकञ्च तत्तथ्यमानं शृणुत द्विजेन्द्राः॥
यदा जिगीषुर्धृतशस्त्रपाणिः श्रियं समालम्ब्य स विक्रमेण।
सर्वान् सपत्नांश्च स हन्तुकामस्तदाग्निरूपं इवावभाति।
आकारणात्कारणतोऽपि एष प्रजा हतेयं स सदृक्कीर्तिः॥
यदा तदेनं नृपतीति विप्रास्तनूनपात्तं प्रवदन्ति भूपम्॥
धर्मासनस्थश्रुतिशास्त्रदृष्टाः शुभाशुभाचारविचारकस्थात्॥
धर्म्येषु दानं त्वघकृत्सु दण्डं यदावनीशः सच धर्मराजः।
धनप्रदानेन करोति हृष्टा भृत्यस्तदासान्द्रविपेशवश्यान्॥
समस्तशीतांशुगुणप्रयोक्ता यदायदामेष शुभाय शास्येत्।
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इव क्षितीशः॥
आज्ञा नृपाणां परमं हि तेजो येषां न मन्ये त समस्तवश्यः
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यन्तदेवं भुवि सर्वलोकैः॥
दुर्धर्षतीव्रांशुसमानदीप्तो ब्रूयान्मनुष्यः परुषं नृपस्य।
यस्तस्य तेजोऽप्यसमस्यमान्यः सद्यः स पञ्चत्व मुपैति पापात्

योऽक्काय सर्वं विदधाति पश्येत्
शृणोति जानाति चकास्ति शास्ति।
कस्यापि चाज्ञां न बिभर्ति राज्ञः
समस्तदैवांशभवोऽपि यस्मात्॥
यः स्वधर्मे स्थितो राजा प्रजां धर्मेण पालयन्।
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात्॥
इति श्रीहरिहरत्याराशरीये राजधर्मः सम्पूर्णः।

---

अथ विप्रो वनं गच्छेद्विना वा सह भार्यया।
जितेन्द्रियो वसन्नेव नित्यशौचाग्निकर्मकृत्॥
वन्यैर्मुन्यन्नैर्मेध्यैः श्यामनीवारकङ्गुभिः।
कन्दमूलफलैः शाकैः स्नेहैश्च फलसम्भवैः।
सायं प्रातश्च जुहुयात् त्रिकालं स्नानमाचरेत्॥
चर्मचीवरवासा वै श्मश्रुलोमजटाधरः।
पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत्।
अर्चयेदतिथीन् नित्यं भृत्यांश्चापि प्रपोषयेत्॥
न किञ्चित् प्रतिगृह्णीयात् स्वाध्यायेनैत्यमाचरेत्।
सर्वसत्त्वहितोपेतो दान्तश्चाप्यात्मचिन्तकः॥
सङ्कल्पसान्तको नित्यं दानशीलः सदा द्विजः।
किञ्चिद्देहं समाश्रित्य स वृत्या वर्तयेत्सदा॥
एकाह्निकन्तु कुर्वीत मासैकवार्षसञ्चयम्।
षाण्मासिकञ्चाब्दिकञ्च यथार्थं च वने वसेत्।
त्यक्त्वा तदाश्विने मासि पश्च स्थानं समाचरेत्॥
यथावदग्निहोत्रं तु समिधाग्नौ च पालयेत्।

